उदाहरणम् ।

द्विगुणेन कयोः राश्योर्घातेन सदृशं भवेत् ।
दशेन्द्रहतराश्यैक्यं न्यूनषष्टिविवर्जितम् ॥ १ ॥

अत्र राशी या १, का १। अनयोर्यथोक्ते कृते भाविताङ्केन भक्ते जातम् या ५ का ७ रू २६। अत्र वर्णाङ्काहतिरूपैक्यं ६ द्विहतमिष्टफले २, ३। आभ्यां वर्णाङ्कौ युतौ राशी १०, ७ वा ९, ८। वा ऊनितौ जातौ ४, ३ वा ५, २।

उदाहरणम् ।

त्रिपञ्चगुणराशिभ्यां युतो राश्योर्वध. कयो· ।
द्विषष्टिप्रमितो जातो राशि त्वं वेत्सि चेद्वद ॥ २ ॥

अत्र यथोक्ते कृते जातौ पक्षौ $\left\{ \begin{matrix} \text{या ३ का ५ रू ६२} \\ \text{या.का.भा} \end{matrix} \right.$ । वर्णाङ्काहतिरूपैक्यम् ७७। इष्टतत्फले ७, ११। आभ्यां वर्णाङ्कौ युतावेव कार्यौ इष्टतत्फलाभ्यामाभ्याम् ७, ११ ऊनितौ चेद्विधीयेते तदा ऋणगतौ भवतोऽत आभ्यां ७, ११ युतौ जातौ राशी ६, ४ वा २, ८। ऊनितौ १२, १४, वा १६, १०।

अथ पूर्वचतुर्थोदाहरणम् ।

यौ राशी किल या च राशिनिहतिर्यौ राशिवर्गौ तया
तेषामैक्यपदं सराशियुगलमिति ।

अत्र राशी या १, का १। अनयोर्घातयुतिवर्गाणां योगः

याव १ काव १ या का भा १ या १ का १। अस्य मूलाभावाद्राशिद्वयोनायास्त्रयोविंशते· या १ का १ रू २३ वर्गेणानेन याव १ काव १ या.का.भा २ या ४६ का ४६ रू ५२९, साम्यम्। तत्र समयोगवियोगादौ समतैवेति समवर्गगमे शोधने च कृते भाविताङ्केन हृते जातम्—

या ४७ का ४७ रू ५२९। अत्र वर्णाङ्काहति रूपयुता १६८०। इयं चत्वारिंशतेष्टेन हृता फलम् ४२, इष्टम् ४०। अत्रेष्टफलाभ्यामाभ्यां वर्णाङ्कावूनावेव कार्यौ तेन जातौ राशी ७, ५। युतौ चेत् क्रियेते तर्हि जाता त्रयोविंशतिरिति पूर्वलापो न घटते।

पूर्वोदाहरणम्। पञ्चाशत् त्रियुताऽथ वेति।

अत्रोदाहरणे यथोक्तकृतभाविताङ्केन विभक्ते जातम्
या १०७ का १०७रू २८०९ । अत्र वर्णाङ्काहतिरूपैक्यम् ८६४० ।
इष्टतत्फले ९०, ९६ । आभ्यां वर्णाङ्कावूनितौ राशी ११, १७ ।
एवमन्यत्रापि ।

क्वचिद्बहुषु साम्येषु भावितोन्मितीरानीय ताभ्यः समीकृतच्छेदगमाभ्यः साम्ये पूर्वबीजक्रिययैव राशी ज्ञायेते । अत्र राशी इति द्विवचनादन्येषां ङ्यादिवर्णानामिष्टानि मानानि कल्प्यानीत्यर्थात् सिद्धम् ।

इति श्रीभास्कराचार्यविरचिते बीजगणिते भावितं समाप्तम् ।

---

आसीन्महेश्वर इति प्रथितः पृथिव्या-
माचार्यवर्यपदवीं विदुषां प्रपन्नः ।
लब्ध्वाऽवबोधकलिकां तत एव चक्रे
तज्जेन बीजगणितं लघु भास्करेण ॥

ब्रह्माह्वयश्रीधरपद्मनाभबीजानि यस्मादतिविस्तृतानि ।
आदाय तत्सारमकारि नूनं सद्युक्तियुक्तं लघु शिष्यतुष्ट्यै ॥

अत्रानुष्टुप्सहस्रं हि ससूत्रोद्देशके मितिः ।
क्वचित् सूत्रार्थविषयं व्याप्तिं दर्शयितुं क्वचित् ॥

क्वचिच्च कल्पनाभेदं क्वचिद्युक्तिमुदाहृतम् ।
न ह्युदाहरणान्तोऽस्ति स्तोकमुक्तमिदं यतः ॥

दुस्तरः स्तोकबुद्धीनां शास्त्रविस्तारवारिधिः ।
अथवा शास्त्रविस्तृत्या किं कार्यं सुधियामपि ॥

उपदेशलवं शास्त्रं कुरुते धीमतो यतः ।
तत् तु प्राप्यैव विस्तारं स्वयमेवोपगच्छति ॥

यथोक्तं यन्त्राध्याये ।

जले तैलं खले गुह्यं पात्रे पानं मनागपि ।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥

तथा गोले मयोक्तम् ।

उल्लसदमलमतीनां त्रैराशिकमात्रमेव पाटी बुद्धिरेव बीजम् ।

तथा गोलाध्याये मयोक्तम् ।

अस्ति त्रैराशिकं पाटी बीजं च विमला मतिः ।
किमज्ञातं सुबुद्धीनामतो मन्दार्थमुच्यते ॥

गणकभणितिरम्यं बाललीलावगम्यं
सकलगणितसारं सोपपत्तिप्रकारम् ।
इति बहुगुणयुक्तं सर्वदोषैर्विमुक्तं
पठ पठ मतिवृद्ध्यै लघ्विदं प्रौढिसिद्ध्यै ॥

इति श्रीभास्कराचार्यविरचिते सिद्धान्तशिरोमणौ
बीजगणिताध्यायः समाप्तः ।

---

वि०—इति कृपालुतनूजसुधाकरो यदिह भास्करबीजमपूर्वकम् ।
तदुपपत्तिमतां च मम कृतिं विधिवरम्य चकार च कारणम् ॥

---

## प्रक्षिप्तविषयाः ।

विशेष —अथ प्रसङ्गाद्ग्रहगणितोपयुक्तत्वादासन्नमानार्थं क्रिया प्रदर्श्यते,

$$\frac{१००}{६३} = १ + \frac{३७}{६३} = १ + \cfrac{१}{\cfrac{६३}{३७}} = १ + \cfrac{१}{१ + \cfrac{२६}{३७}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{\cfrac{३७}{२६}}} = १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{११}{२६}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{\cfrac{२६}{११}}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \cfrac{४}{११}}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \cfrac{१}{\cfrac{११}{४}}}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \cfrac{१}{२ + \cfrac{३}{४}}}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \cfrac{१}{२ + \cfrac{१}{\frac{४}{३}}}}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \cfrac{१}{२ + \cfrac{१}{१ + \frac{१}{३}}}}}}$$

अत्र प्रथमलब्धिग्रहणेन मानम् $= \frac{१}{१} = \frac{१}{१}$

प्रथमलब्धिद्वयग्रहणेन मानम् $= १ + \frac{१}{१} = \frac{२}{१}$

प्रथमलब्धित्रयग्रहणेन मानम् $= १ + \cfrac{१}{१ + \frac{१}{१}} = \frac{३}{२}$

प्रथमलब्धिचतुष्कग्रहणेन मानम् $= १ + \cfrac{१}{१ + \cfrac{१}{१ + \frac{१}{२}}} = \frac{८}{५}$

प्रथमलब्धिपञ्चकग्रहणेन मानम् $= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \frac{१}{२}}}} = \frac{१९}{१२}$

प्रथमलब्धिपदत्वग्रहणेन मानम् $= \cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{२+\cfrac{१}{२+\cfrac{१}{१}}}}}} = \frac{२७}{१७}$

एवमत्र, $\frac{१}{१}, \frac{२}{१}, \frac{३}{२}, \frac{८}{५}, \frac{१९}{१२}, \frac{२७}{१७}$ एतानि

वास्तवभिन्नस्य $\frac{१००}{६३}$ अत्यासन्नमानानि कथ्यन्ते ।

अत्र $\frac{१}{१}$ इदं मानं वास्तवभिन्नमानादल्पम् ।

$\frac{२}{१}$ इदं चाधिकं द्वितीयखण्डस्याधिक्यात् ।

$\frac{३}{२}$ इदं चाल्पं तृतीयखण्डस्याल्पत्वात् ।

एवं पाश्चात्त्यभजनरीत्या स्फुटमवगम्यते यद्विषमासन्नमानानि वास्तवभिन्नादल्पानि समानि चाधिकानि सन्तीति ।

एवं वर्णविन्यासेन

$$\frac{अ}{क} = ग + \cfrac{१}{घ+\cfrac{१}{च+\cfrac{१}{छ+\cfrac{१}{ज+\cfrac{१}{त+\cfrac{१}{द+\cfrac{१}{न+}}}}}}} \ldots$$

पूर्ववल्लब्धिग्रहणेनासन्नमानानि

$\frac{ग}{१}, \frac{ग.घ+१}{घ}, \frac{च\,(ग.घ+१)+ग}{च.घ+१},$

$$\frac{\text{छ}\left\{\text{च}(\text{ग}.\text{घ}+१)+\text{ग}\right\}+(\text{ग}\text{घ}+१)}{\text{छ}(\text{च}.\text{घ}+१)+\text{घ}},\ \text{इत्यादि।}$$

अत्र तृतीयमाने तृतीयलब्धिद्वितीयमानांशवधः प्रथममानांशयुक्तो ह्यंशः । तृतीयलब्धिद्वितीयमानहरवधः प्रथममानहरयुक्तो हि हर इति दृश्यते, एवं चतुर्थमानादिषु च रीतिर्दृश्यते तेनासन्नमानद्वयज्ञानाल्लब्धिभ्योऽन्यान्यासन्नमानानि सुखेन ज्ञायन्ते ।

अथ पूर्वागतप्रथमद्वितीययोरासन्नमानयोरन्तरेण यद्भिन्नमुत्पद्यते तत्रांशस्थाने रूपमिति दृश्यते । अथ कल्प्यन्ते त्रीण्यासन्नस्थितान्यासन्नमानानि

$\frac{\text{अ}_1}{\text{क}_1}, \frac{\text{अ}_2}{\text{क}_2}, \frac{\text{अ}_3}{\text{क}_3}$ । $\frac{\text{अ}_3}{\text{क}_3}$ एतत्सम्बन्धिनी लब्धिश्च ल, तदा

पूर्वप्रकारेण $\frac{\text{अ}_3}{\text{क}_3} = \frac{\text{ल}\,\text{अ}_2+\text{अ}_1}{\text{ल}.\text{क}_2+\text{क}_1}$

अतः

$$\frac{\text{अ}_2}{\text{क}_2} \backsim \frac{\text{अ}_3}{\text{क}_3} = \frac{\text{अ}_2}{\text{क}_2} \backsim \frac{\text{ल}.\text{अ}_2+\text{अ}_1}{\text{ल}.\text{क}_2+\text{क}_1}$$

$$= \frac{\text{ल}.\text{अ}_2.\text{क}_2+\text{अ}_2.\text{क}_1 \backsim \text{ल}\,\text{अ}_2.\text{क}_2+\text{अ}_1.\text{क}_2}{\text{क}_2(\text{ल}\text{क}_2+\text{क}_1)}$$

$$= \frac{\text{अ}_2.\text{क}_1 \backsim \text{अ}_1.\text{क}_2}{\text{क}_2(\text{ल}\text{क}_2+\text{क}_2)},\ \text{अत्रांशमानम्}$$

$\frac{\text{अ}_1}{\text{क}_1}, \frac{\text{अ}_2}{\text{क}_2}$ अनयोरन्तरांशमानममत इष्टपृष्ठस्थयोरन्तरे यदंशमानं तदव्यवहितयोरन्तरे भव यंशमानं परन्तु प्रथमद्वितीयासन्नमानयोरन्तरे त्वंशमानं रूपसमं पूर्वसिद्धं तेनासन्नस्थयोर्द्वयोरासन्नमानयोरन्तरे सर्वदाऽंशमानं रूपं भवतीति सिध्यति ।

अथ पूर्वयुक्त्या: $\text{अ}_2.\text{क}_1 \backsim \text{अ}_1.\text{क}_2 = १$

अतः पूर्वयुक्त्या अ$_1$ क$_1$ एतौ वा अ$_2$ क$_2$ एतौ परस्परं दृढौ भवतोऽन्यथा तदपवर्तनाङ्केन रूपमप्यपवर्त्यं भवेत् तदयुक्तमित्यत आसन्नमानेषु सर्वत्र हरांशौ दृढौ भवत इति सिध्यति ।

कल्प्यन्ते, $\frac{\text{अ}_1}{\text{क}_1}, \frac{\text{अ}_2}{\text{क}_2}, \frac{\text{अ}_3}{\text{क}_3}$ आसन्नस्थानि मानानि तदा पूर्ववत्,

$$\frac{\text{अ}_3}{\text{क}_3} = \frac{\text{ल अ}_2 + \text{अ}_1}{\text{ल क}_2 + \text{क}_1}$$ वास्तवभिन्न च ल, स्थाने ल+इ, इत्यस्योत्थापनेन

जातम् $= \dfrac{(\text{ल}+\text{इ})\,\text{अ}_2 + \text{अ}_1}{(\text{ल}+\text{इ})\,\text{क}_2 + \text{क}_1}$, इ = रूपाल्पसंख्या ।

अत्र भिन्न $- \dfrac{\text{अ}_2}{\text{क}_2} = \dfrac{\text{ल.अ}_2 + \text{इ अ}_2 + \text{अ}_1}{\text{ल क}_2 + \text{इ क}_2 + \text{क}_1} - \dfrac{\text{अ}_2}{\text{क}_2}$

$$= \frac{\text{ल क}_2\,\text{अ}_2 + \text{इ क}_2\,\text{अ}_2 + \text{क}_2\,\text{अ}_1 - \text{ल क}_2.\text{अ}_2 - \text{इ क}_2\,\text{अ}_2 - \text{क}_1\,\text{अ}_2}{\text{क}_2\,(\text{ल क}_2 + \text{इ क}_2 + \text{क}_1}$$

$$= \frac{\text{क}_2\,\text{अ}_1 - \text{क अ}_2}{\text{क}_2\,(\text{ल क}_2 + \text{इ.क}_2 + \text{क}_1} = \frac{1}{\text{क}_2\,\left\{\text{क}_2\,(\text{ल}+\text{इ}) + \text{क}\right\}}$$

एवं

$$\frac{\text{अ}_3}{\text{क}_3} - \text{भिन्न} = \frac{\text{ल अ}_2 + \text{अ}_1}{\text{ल क}_2 + \text{क}_1} - \frac{\text{ल अ}_2 + \text{अ}_1 + \text{अ}_2\,\text{इ}}{\text{ल क}_2 + \text{क}_1 + \text{क}_2\,\text{इ}}$$

$$= \frac{\text{ल}^2\text{क}_2\,\text{अ}_2 + \text{ल क}\;\text{अ}_2 + \text{ल क}_2\,\text{अ}_2\,\text{इ} + \text{ल क}_2\,\text{अ}_1 + \text{अ}_1\,\text{क}_1 + \text{अ}_1\,.\text{क}_2\,\text{इ}}{\text{क}_3\,(\text{ल क}_2 + \text{क}_1 + \text{क}_2\,\text{इ})}$$

$$- \frac{\text{ल}.^2\text{क}_2\,\text{अ}_2 + \text{ल क}_2\,\text{अ}_1 + \text{ल क}_2\text{अ}_2\,\text{इ} + \text{ल अ}_2\,\text{क}_1 + \text{अ}_1\,\text{क}_1 + \text{क}_1\,\text{अ}_2\,\text{इ}}{(\text{क}_3\,(\text{ल क}_2 + \text{क}_1 + {}_2\text{इ})}$$

$$= \frac{\text{इ}\,(\text{अ}_1\,\text{क}_2 - \text{क}_1\,\text{अ}_2)}{\text{क}_3\,(\text{ल क}_2 + \text{क}_1 + \text{क}_2\,\text{इ}} = \frac{\text{इ}}{\text{क}_3\,(\text{ल क}_2 + \text{क}_1 + \text{क}_2\,\text{इ}}$$

प्रथमान्तरस्यासन्नमानादस्यान्तरस्यासन्नमानमल्पं तदीयहरमानादस्य हरमानं चाधिकमत उत्तरत आसन्नमानानि सूक्ष्माणि वास्तवभिन्नस्य निकटस्थत्वादिति सिध्यति । अथैषां सिद्धान्तानां सूत्राणि ।

आसन्नमानस्य हरांशमाने अग्रिमगुण्ये गदिते क्रमेण ।
पृष्ठस्थितासन्नहरांशकाभ्यां तदा हरांशौ भवतोऽग्रिमस्य ॥ १ ॥
आसन्नमानयोरासन्नयोरन्तरं भवेत् ।
अग्रस्थाने सदा रूपं निन्द्यमेतच्च धीमता ॥ २ ॥
सर्वेष्वासन्नमानेषु हरांशौ भवतो दृढौ ।
तथोत्तरोत्तरं सूक्ष्माण्यासन्नानि भवन्ति हि ॥ ३ ॥

कल्पते $\dfrac{\text{अ}_1}{\text{क}_1}$ इदमासन्नमानं वास्तवभिन्नात् किंचिदल्पम् $\dfrac{\text{स}}{\text{१}}$ अस्य भिन्नस्य हर-

मानं र, क$_1$ अस्मादल्पम् तदा $\dfrac{\text{स}}{\text{र}}$ अस्मात् इदमेव निकटतरं वास्तवभिन्नस्य, यद्येवं न तर्हि $\dfrac{\text{अ}_1}{\text{क}_1}$, $\dfrac{\text{अ}_2}{\text{क}_2}$ अनयोरन्तरात् $\dfrac{\text{स}}{\text{र}}$, $\dfrac{\text{अ}_2}{\text{क}_2}$, अनयोरन्तरमल्पतरम् ।

$$\text{यत}\quad \frac{\text{अ}_1}{\text{क}_1} < \frac{\text{स}}{\text{र}} < \text{वाभि.} < \frac{\text{अ}_2}{\text{क}_2} \left( \frac{\text{अ}_2}{\text{क}_2} = \text{अग्रिमागनम} \right)$$

$$\text{अतः}\quad \frac{\text{अ}_1}{\text{क}_1} \backsim \frac{\text{अ}_2}{\text{क}_2} = \frac{1}{\text{क}_1.\text{क}_2} < \frac{\text{अ}_2}{\text{क}_2} - \frac{\text{स}}{\text{र}}$$

$$\text{वा,}\ \frac{1}{\text{क}_1.\text{क}_2} > \frac{\text{अ}_2.\text{र} - \text{क}_2.\text{स}}{\text{क}_2.\text{र}}\ \text{वा,}\ \frac{1}{\text{क}_1} > \frac{\text{अ}_2.\text{र} - \text{क}_2.\text{स}}{\text{र}}$$

अथ $\text{क}_1 > \text{र}$ अतः $1 > \text{अ}_2.\text{र} - \text{क}_2.\text{स}$ इदमसम्भवं यतः $\text{अ}_2.\text{र}$, $\text{क}_2.\text{स}$ अनयोरभिन्नसंख्ययोरन्तरं रूपाल्पमवशिष्यते—

कल्प्यते $\dfrac{\text{अ}_1}{\text{क}_1}$, $\dfrac{\text{अ}_2}{\text{क}_2}$ आसन्नस्थमासन्नमानद्वयं

तदा $\dfrac{\text{अ}_1.\text{अ}_2}{\text{क}_1.\text{क}_2}$ इदं वास्तवभिन्नवर्गादधिकम्

यदि $\dfrac{\text{अ}_1}{\text{क}_1} > \dfrac{\text{अ}_2}{\text{क}_2}$, अन्यथाऽल्पमिति

यतो यदि मावयवलब्धि $= \text{ल}$

$$\text{तदा वास्तवभिन्नम} = \frac{\text{ल}.\text{अ}_2 + \text{अ}_1}{\text{ल}.\text{क}_2 + \text{क}_1}$$

$$\text{अत}\quad \frac{\text{अ}_1}{\text{वाभि}\ \text{क}_1} - \frac{\text{वाभि}\ \text{क}_2}{\text{अ}_2} = \frac{\text{क}_2}{\text{वाभि}.\ \text{अ}_2} \left( \frac{\text{अ}_1.\text{अ}_2}{\text{क}_1.\text{क}_2} - \text{वाभि} \right)$$

$$= \frac{\text{अ}_1(\text{ल}\,\text{क}_2 + \text{क}_1)}{\text{क}_1(\text{ल}\,\text{अ}_2 + \text{अ}_1)} - \frac{\text{क}_2(\text{ल}\,\text{अ}_2 + \text{अ}_1)}{\text{अ}_2(\text{ल}\,\text{क}_2 + \text{क}_1)}$$

अत्र समच्छेदतोऽन्तरेऽशमानम्

$$= \text{अ}_1.\text{अ}_2(\text{ल}.\text{क}_2 + \text{क}_1)^2 - \text{क}_1.\text{क}_2(\text{ल}.\text{अ}_2 + \text{अ}_1)^2$$

$$= \text{अ}_1.\text{अ}_2.\text{ल}^2.\text{क}_2^2 + 2\text{अ}_1.\text{अ}_2.\text{ल}.\text{क}_2.\text{क}_1 + \text{अ}_1.\text{अ}_2.\text{क}_1^2$$

$$- \text{क}_1.\text{क}_2.\text{ल}.\text{अ}_2^2 - 2\text{अ}_1.\text{अ}_2.\text{ल}.\text{क}_2.\text{क}_1 - \text{क}_1.\text{क}_2.\text{अ}_1^2$$

$$= \text{ल}^2\text{अ}_2\text{क}_2(\text{अ}_1\text{क}_2 - \text{अ}_2\text{क}_1) - \text{अ}_1\text{क}_1(\text{अ}_1.\text{क}_2 - \text{अ}_2.\text{क}_1)$$

$$=(\text{ल}^{२}.\text{अ}_{२}.\text{क}_{२}-\text{अ}_{१}\,\text{क}_{१})\,(\text{अ}_{१}.\text{क}_{२}-\text{अ}_{२}\,\text{क}_{१})$$

अत्र $(\text{ल}^{२}.\text{अ}_{२}.\text{क}_{२}-\text{अ}_{१}.\text{क}_{१})$ इद सर्वदा धनमेव

$$\text{अ}_{१}.\text{क}_{२}-\text{अ}_{२}.\text{क}_{१}=\text{क}_{१}.\text{क}_{२}\left(\frac{\text{अ}_{१}}{\text{क}_{१}}-\frac{\text{अ}_{२}}{\text{क}_{२}}\right)$$ इदं तु

यदा $\frac{\text{अ}_{१}}{\text{क}_{१}}>\frac{\text{अ}_{२}}{\text{क}_{२}}$ तदा धनमतस्तदा

$$\frac{\text{क}_{२}}{\text{वाभि}.\text{अ}_{२}}\left(\frac{\text{अ}_{१}.\text{अ}_{२}}{\text{क}_{१}.\text{क}_{२}}-\text{वाभि}^{२}\right)$$ इदं वा

$$\frac{\text{अ}_{१}\text{अ}_{२}}{\text{क}_{१}\text{क}_{२}}-\text{वाभि}^{२}$$ इद धन भवति

तत $\frac{\text{अ}_{१}\text{अ}_{२}}{\text{क}_{१}\text{क}_{२}}>\text{वाभि}^{२}$ इदमुपपन्नं भवति

अत सूत्रावतार ।

आसन्नमानहरतो यान्भिन्नस्य हरो भवेत् ।
अल्प आसन्नमानात् स्यान्न स सूक्ष्मतरस्तत ॥ १
द्वयोरासन्नयोरासन्नस्थयोराहतिर्भवेत् ।
कृतेर्वास्तवभिन्नस्याधिका पूर्वेऽधिकेऽग्रिमात् ॥ २ ॥

अथ यथासन्नमानोक्तविधिनाऽवर्गस्य मूलमानीयते तदाऽधोलिखितक्रियोत्पद्यते—

यथा

$$\sqrt{११}=\frac{\sqrt{११}+०}{१}=३+\frac{\sqrt{११}-३}{१}$$

$$=३+\frac{(\sqrt{११}-३)(\sqrt{११}+३)}{\sqrt{११}+३}=३+\frac{२}{\sqrt{११}+३}$$

$$=३+\frac{१}{\frac{\sqrt{११}+३}{२}}=३+\frac{१}{३+\frac{\sqrt{११}+३-६}{२}}$$

$$=३+\frac{१}{३+\frac{\sqrt{११}-३}{२}}=३+\frac{१}{३+\frac{२}{२(\sqrt{११}+३)}}$$

$$=\text{३}+\cfrac{\text{१}}{\text{३}+\cfrac{\text{१}}{\sqrt{\text{११}}+\text{३}}}=\text{३}+\cfrac{\text{१}}{\text{३}+\cfrac{\text{१}}{\cfrac{\sqrt{\text{११}}+\text{३}}{\text{१}}}}$$

$$=\text{३}+\cfrac{\text{१}}{\text{३}+\cfrac{\text{१}}{\cfrac{\text{६}+\sqrt{\text{११}}-\text{३}}{\text{१}}}}=\text{३}+\cfrac{\text{१}}{\text{३}+\cfrac{\text{१}}{\text{६}+\cfrac{\text{२}}{\sqrt{\text{११}}+\text{३}}}}$$

इत्यादि। एवमत्र ३, ३, ६, इत्यादि-लब्धिग्रहणेनैकादशमूलस्यासन्नमानानि आसन्नमानानयोक्त्याऽऽगच्छेयुः।

एवमक्षरविन्यासेन

$$\frac{\sqrt{\text{न}}+\text{०}}{\text{१}}=\text{अ}+\frac{\sqrt{\text{न}}-\text{अ}}{\text{१}}=\text{अ}+\frac{\text{शे}}{\sqrt{\text{न}}+\text{अ}}\ ।$$

यदि $\text{शे}=\text{न}-\text{अ}^{2}$ तथा न इत्यस्य निरग्रमूलम् $=\text{अ}$।

$$\frac{\sqrt{\text{न}}+\text{अ}}{\text{शे}}=\text{क}+\frac{\sqrt{\text{न}}+\text{अ}-\text{शे}.\text{क}}{\text{शे}}=\text{क}+\frac{\text{शे}'}{\sqrt{\text{न}}+\text{अ}'}$$

यदि $\text{अ}'=\text{शे}.\,\text{क}-\text{अ}$, तथा $\text{शे}'=\dfrac{\text{न}-\text{अ}'^{2}}{\text{शे}}$

अत्र न इत्यस्य निरग्रमूलम् अ-संज्ञया युक्तं शे-संज्ञया भक्तं यन्निरग्र लब्धं भवेत् तत् कसंज्ञं बोध्यम्।

एवं तथैव

$$\frac{\sqrt{\text{न}}+\text{अ}'}{\text{शे}'}=\text{क}+\frac{\sqrt{\text{न}}+\text{अ}'-\text{शे}'.\,\text{क}'}{\text{शे}'}=\text{क}'+\frac{\text{शे}''}{\sqrt{\text{न}}+\text{अ}''}$$

यदि $\text{अ}''=\text{शे}'.\,\text{क}'-\text{अ}'$, तथा $\text{शे}''=\dfrac{\text{न}-\text{अ}''^{2}}{\text{शे}'}$

अत्र न इत्यस्य यन्निरग्रमूलं तत् अं-संज्ञकेन युक्तं शे'-संज्ञया भक्तं यन्निरग्र लब्धं तत् कंसंज्ञं ह्येवमेवमग्रेऽपि बोध्यमित्येव यद्यप्यत्र स्फुटं दृश्यते शे, शें, शे", इत्यादीनां तथा, अ, अं, अँ इत्यादीनां च धनत्वं तथाऽपि स्पष्टार्थं सङ्क्षेपतः प्रदर्श्यते।

कल्प्यन्ते कस्याप्यासन्नमूले क्रमेण त्रयाणां राशिसमूहानां मानानि।

$$\text{०}, \text{अ}, \text{अ}', \text{अ}'', \text{अ}''', \quad \cdots \quad \cdots \quad \cdots \quad (१)$$

$$१, \text{शे}, \text{शे}', \text{शे}'', \text{शे}''', \quad \cdots \quad \cdots \quad \cdots \quad (२)$$

$$\text{अ}, \text{क}, \text{क}', \text{क}'', \text{क}''', \quad \cdots \quad \cdots \quad \cdots \quad (३)$$

कल्प्यन्ते-(१) ऽस्मिन् क्रमेण राशित्रयमानम् पृथक् $\text{अ}_1$, $\text{अ}'_1$, $\text{अ}''_1$, तत्सम्बन्धिराशित्रय (२) $\text{शे}'_1$, $\text{शे}'_1$, $\text{शे}''_1$ । (३) $\text{क}_1$, $\text{क}'_1$, $\text{क}''_1$, च राशित्रयम्

अत्र $\text{क}_1$, $\text{क}'_1$, $\text{क}''_1$,–त्रयवशादासन्नमूलस्यासन्नमानानि $\frac{\text{प}}{\text{ल}}$, $\frac{\text{प}'}{\text{ल}'}$, $\frac{\text{प}''}{\text{ल}''}$, चेति ।

तदासन्नमानानयनविधिना

$$\frac{\text{प}''}{\text{ल}''} = \frac{\text{क}''_1 . \text{प}' + \text{प}}{\text{क}''_1 . \text{ल}' + \text{ल}}$$

। अथ $\text{क}''_1$,–स्थाने यदि सावयवा वास्तवा लब्धि $\frac{\sqrt{\text{न}} + \text{अ}''_1}{\text{शे}'}$ इय गृह्यते तदा

$$\sqrt{\text{न}} = \frac{\frac{\sqrt{\text{न}} + \text{अ}_1}{\text{शे}'} \text{प}' + \text{प}}{\frac{\sqrt{\text{न}} + \text{अ}.}{\text{शे}''} \text{ल}' + \text{ल}} = \frac{\text{प}' (\sqrt{\text{न}} + \text{अ}.) + \text{शे}'' \text{प}}{\text{ल} (\sqrt{\text{न}} + \text{अ}''_1) + \text{शे}''. \text{ल}}$$

पक्षौ समच्छेदीकृत्यासम्भवसम्भवयो पृथक् पृथक् समाकरण कृत्वा जात समीकरणद्वयम् $\text{अ}''_1 \ \text{प}' + \text{शे}'' \text{प} = \text{न} \text{ल}'$, $\text{अ}. \text{ल}' + \text{शे}'' \text{ल} = \text{प}'$

तत

$$\text{अ}''_1 (\text{प} \text{ल}' - \text{प}' \text{ल}) = \text{प} \text{प}' - \text{ल}.\text{ल}' \text{न} = \text{ल} \text{ल}' \left(\frac{\text{प} \text{प}'}{\text{ल} \text{ल}'} - \text{न}\right)$$

$$\text{शे}''_1 \ (\text{प} \text{ल}' - \text{प}' \text{ल}) = \text{ल}'^2 . \text{न} - \text{प}'^2 = \text{ल}'^2 \ \left(\text{न} - \frac{\text{प}'^2}{\text{ल}'^2}\right)$$

$$\text{वा}, \ \text{ल}.\text{ल}'.\text{अ}''_1 \left(\frac{\text{प}}{\text{ल}} - \frac{\text{प}'}{\text{ल}'}\right) = \text{ल}.\text{ल}' \left(\frac{\text{प}.\text{प}'}{\text{ल} \text{ल}'} - \text{न}\right)$$

$$\text{अत} \ \text{अ}''_1 \left(\frac{\text{प}}{\text{ल}} - \frac{\text{प}'}{\text{ल}'}\right) = \frac{\text{प} \text{प}'}{\text{ल} \text{ल}'} - \text{न}$$

गत्र यदि $\frac{\text{प}}{\text{ल}} > \frac{\text{प}'}{\text{ल}'}$ तदा $\frac{\text{प} \text{प}}{\text{ल}.\text{ल}'} > \text{न}$

यदि च $\frac{\text{प}}{\text{ल}} < \frac{\text{प}'}{\text{ल}'}$ तदा $\frac{\text{प.प}'}{\text{ल.ल}'} < \text{न}$

आसन्नमानान्तिमसूत्रात् $\text{अ}''_3$ इत्यस्य मानं सर्वदा धनम्।

एवम्

$$\text{ल.ल}'\,\text{शे}''\left(\frac{\text{प}}{\text{ल}} - \frac{\text{प}'}{\text{ल}'}\right) = \text{ल}'^2\left(\text{न} - \frac{\text{प}'^2}{\text{ल}'^2}\right)$$

$$\text{अत}\ \text{ल}\,\text{शे}''_3\left(\frac{\text{प}}{\text{ल}} - \frac{\text{प}'}{\text{ल}'}\right) = \text{ल}'\left(\text{न} - \frac{\text{प}'^2}{\text{ल}'^2}\right)$$

अत्र ल, ल', सर्वदा धन तथा यदा $\frac{\text{प}}{\text{ल}} > \frac{\text{प}'}{\text{ल}'}$ तदा $\text{न} > \frac{\text{प}'^2}{\text{ल}'^2}$।

यदा च $\frac{\text{प}}{\text{ल}} < \frac{\text{प}'}{\text{ल}'}$ तदा $\text{न} < \frac{\text{प}'^2}{\text{ल}'^2}$ अत शे$''_3$ इत्यस्य मानं सर्वदा धनं सिध्यति।

अथ (१) अस्मिन् ०, अ एतद् द्वयं धनं तथा (२) अस्मिन् १, शे, इति च धनमस्तीति स्फुटं दृश्यते, तेन किमपि राशित्रयं गृहीत्वा पूर्वोक्तरीत्या यदि ज्ञायते तदा तृतीयो धनात्मकः सिध्यति।

अत (१), (२) अनयोः सर्वे राशयो धनात्मकाः सन्ति।

पूर्वप्रतिपादितसमीकरणेऽस्मिन् शे$'_3$ $(\text{प.ल}' - \text{प}'\text{ल}) = \text{ल}'^2\ \text{न} - \text{प}'^2$

आसन्नमानानयनयुक्त्या $\text{प.ल}' - \text{प}'.\text{ल} = \pm 1$ तेन $\pm\text{शे}''_3 = \text{ल}'^2\ \text{न} - \text{प}'^2$ पक्षान्तरानयनेन $\text{प}'^2 = \text{ल}'^2\ \text{न} \mp \text{शे}''_3$

अतो यस्या आसन्नमूलमपेक्षितं सा मानया चेत् प्रकृतिः कल्प्यते तदा तदासन्नमानस्य हरः कनिष्ठं लब्धिश्च ज्येष्ठं भवति तदग्रिमशेषसमे क्षेपे इति सिध्यति, अर्था आसन्नमानस्य समत्वे तदग्रिमशेषसमधनक्षेपे विषमत्वे तु तदग्रिमशेषसमर्णक्षेपे हरांशौ माने कनिष्ठज्येष्ठे क्रमेण भवत इति। अतो यदा तच्छेषमानं रूपसमं स्यात् तदा यदासन्नमानं तत्र हरांशमाने रूपक्षेपे वा रूपशुद्धौ ह्रस्वज्येष्ठे अभिन्ने भवतोऽतो ऽनुपत्तिः सूत्राणि।

निरग्र पदं यद्गुणात् स्यात् फलाद्यं धनाद्यं च तदेवाग्र शेषं तदग्रम्।
पदाद्यं धनं शेषहृद्यसमन्यत् फलं तच्च शेषमूनं धनेन ॥ १ ॥
धनाद्यं नवं तस्य कृत्वा विहीनो गुणः शेषभक्तोऽन्यदाद्यस्य मानम्।
मुहुस्त्वेवमन्ते यदा शेषमानं भवेद्रूपतुल्यं तदा लब्धिनो ये ॥ २ ॥

यदि च $\frac{\text{प}}{\text{ल}} < \frac{\text{प}'}{\text{ल}'}$ तदा $\frac{\text{प.प}'}{\text{ल.ल}'} < \text{न}$

आसन्नमानान्तिमसूत्रात् $\text{अ}''_{1}$ इत्यस्य मानं सर्वदा धनम् ।

एवम्

$$\text{ल.ल शे}''\left(\frac{\text{प}}{\text{ल}} - \frac{\text{प}'}{\text{ल}'}\right) = \text{ल}'^{2}\left(\text{न} - \frac{\text{प}'^{2}}{\text{ल}'^{2}}\right)$$

$$\text{अतः ल.शे}''_{1}\left(\frac{\text{प}}{\text{ल}} - \frac{\text{प}'}{\text{ल}'}\right) = \text{ल}'\left(\text{न} - \frac{\text{प}'^{2}}{\text{ल}'^{2}}\right)$$

अत्र ल, ल', सर्वदा धन तथा यदा $\frac{\text{प}}{\text{ल}} > \frac{\text{प}'}{\text{ल}'}$ तदा $\text{न} > \frac{\text{प}'^{2}}{\text{ल}'^{2}}$ ।

यदा च $\frac{\text{प}}{\text{ल}} < \frac{\text{प}'}{\text{ल}'}$ तदा $\text{न} < \frac{\text{प}'^{2}}{\text{ल}'^{2}}$ अतः $\text{शे}''_{1}$ इत्यस्य मानं सर्वदा धनं सिध्यति ।

अथ (१) अस्मिन् ०, अ एतद् द्वय धनं तथा (२) अस्मिन् १, शे, इति च धनमस्तीति स्फुटं दृश्यते, तेन किमपि राशित्रय गृहीत्वा पूर्वोक्तरीत्या यदि ज्ञायते तदा तृतीयो धनात्मकः सिध्यति ।

अतः (१), (२) अनयोः सर्वे राशयो धनात्मकाः सन्ति ।

पूर्वप्रतिपादितसमीकरणेऽस्मिन् $\text{शे}'_{1}$, $(\text{प.ल}' - \text{प}'\text{.ल}) = \text{ल}'^{2}\,\text{न} - \text{प}'^{2}$ ,

आसन्नमानानयनयुक्त्या $\text{प.ल}' - \text{प}'\text{.ल} = \pm 1$ तेन $\pm\text{शे}''_{1} = \text{ल}'^{2}\,\text{न} - \text{प}'^{2}$ पक्षान्तरानयनेन $\text{प}'^{2} = \text{ल}'^{2}\,\text{न} \mp \text{शे}''_{1}$

अतो यस्या आसन्नमूलमपेक्षितं सा मान्या चेत् प्रकृतिः कल्प्यते तदा तदासन्नमानस्य हरः कनिष्ठं लब्धिश्च ज्येष्ठं भवति तदग्रिमशेषसमे क्षेपे इति सिध्यति, अर्थादासन्नमानस्य समत्वे तदग्रिमशेषसमधनक्षेपे विषमत्वे तु तदग्रिमशेषसमर्णक्षेपे हरांशमाने कनिष्ठज्येष्ठे क्रमेण भवत इति । अतो यदा तच्छेषमानं रूपसमं स्यात् तदा यदासन्नमान तत्र हरांशमाने रूपक्षेपे वा रूपशुद्धौ ह्रस्वज्येष्ठे अभिन्ने भवतोऽतो मदुक्तानि सूत्राणि ।

निरग्र पदं यद्गुणात् स्यात् फलाप्त्यं धनाप्त्य तदेशाग्र शेष तदग्रम् ।
पदाग्रय धन शेषहृग्रमगन्यत् फलं तत्फलं शेषमून धनेनाँ ॥ १ ॥
धनाप्त्यं नयं तस्य कृत्या विहीनो गुणः शेषभक्तोऽन्यशेषस्य मानम् ।
मुहुस्त्वेवमन्ते यदा शेषमानं भवेद्रूपतुल्यं तदा लब्धितो ये ॥ २ ॥

गुणाप्तौ विशुद्धक्षेपके कुट्टकेन भवेतां पदे ते समा लब्धयश्चेत् ।
विशुद्धक्षेपकेऽथान्यथा रूपशुद्धावशिष्टे सकृत् कुट्टकेनैव सूर्णम् ॥ ३ ॥

यथाऽऽचार्योक्तप्रश्ने प्रकृति ६७ अस्या निरग्रमूल ८ शेष ३ ततः प्रश्नानुसारेण ।

| फ | ध | शे | वल्ली |
| --- | --- | --- | --- |
| ८ | ८ | ३ | ८ |
| ५ | ७ | ६ | ५ |
| २ | ५ | ७ | २ |
| १ | २ | ९ | १ |
| १ | ७ | २ | १ |
| ७ | ७ | ९ | ७ |
| १ | २ | ७ | १ |
| १ | ५ | ६ | १ |
| २ | ७ | ३ | २ |
| ५ | ८ | १ | ५ |
| | | | १ |
| | | | ० |

वल्लीतो जाते गुणाप्ती ५९६७ । ४८८४२ लब्धयः समाः सन्त्यतो जाते कनिष्ठज्येष्ठे रूपक्षेपे क ५९६७ ज्ये ४८८४२ एते, एवं मुहुः कुट्टकविधिना समासभावनया चाचार्योक्त्याऽप्यागच्छतः ।

अथ प्रकृतेरासन्नमूलज्ञानार्थं मदुक्तं सूत्रम् ।

रूपक्षेपे कनिष्ठं यज्ज्येष्ठं तेन हतं पदम् ।
आसन्नं प्रकृतेर्ज्ञेयं सूक्ष्मं बहुकनिष्ठतः ॥

अत्रोपपत्तिः । कनिष्ठज्येष्ठवर्गहृत्याऽभ्यासमतिसुगमेति किं ग्रन्थगौरवेन ।

अथ "पञ्चशतरा मीत्वेत्यत्र विशेषः ।

येषां विंशतिरभ्यस्ताभिमिता षष्टिस्त्वशीतिः क्रमा-
दाम्राणां मुकुलानि सन्ति वणिजो विमीय तुल्यार्घतः ।
किंचित्किंचिदहो निजाद्यभागतेरादौ च शेषं समा-
न्यार्घेणाथ समस्वका वद तदा खण्डादिमाने कियत् ॥

अत्र २० = प्र । ४० = द्वि । ६० = तृ । ८० = च ।

तथा क्रमेण प्रथमखण्डमानानि प्र$_{1}$, द्वि$_{1}$, तृ$_{1}$, च$_{1}$ प्रथमसमार्घमान = वि, द्वितीयसमार्घमान = वि$_{1}$ तदाऽऽलापानुसारेण

प्रथमधनानि प्र$_{1}$. वि । द्वि$_{1}$. वि । तृ$_{1}$. वि । च$_{1}$. वि । द्वितीयधनानि
वि$_{1}$. ( प्र — प्र$_{1}$ ) । वि$_{1}$ ( द्वि — द्वि$_{1}$ ) । वि$_{1}$ ( तृ — तृ$_{1}$ ) । वि$_{1}$ ( च — च$_{1}$ )

योगेन समत्वकाः

$$\text{वि}_1.\text{प्र}+\text{प्र}_1(\text{वि}-\text{वि}_1)=\text{वि}_1.\text{द्वि}+\text{द्वि}(\text{वि}-\text{वि}_1)$$
$$=\text{वि}_1.\text{तृ}+\text{तृ}_1(\text{वि}-\text{वि}_1)=\text{वि}_1.\text{च}+\text{च}_1(\text{वि}-\text{वि}_1)$$

समशोधनेन

$$\text{वि}_1(\text{द्वि}-\text{प्र})=(\text{वि}-\text{वि}_1)(\text{प्र}_1-\text{द्वि}_1)$$
$$\text{वि}_1(\text{तृ}-\text{द्वि})=(\text{वि}-\text{वि}_1)(\text{द्वि}_1-\text{तृ}_1)$$
$$\text{वि}_1(\text{च}-\text{तृ})=(\text{वि}-\text{वि}_1)(\text{तृ}_1-\text{च}_1)$$

यदि $\text{द्वि}-\text{प्र}=\text{स}.\text{प}_1$ । $\text{तृ}-\text{द्वि}=\text{स}.\text{प}_2$ । $\text{च}-\text{तृ}=\text{स}.\text{प}_3$

यत्र द्वि—प्र, तृ—द्वि, च—तृ एषां समापवर्त्तनं = स ।

तदा
$$\text{वि}_1.\text{स}.\text{प}_1=(\text{वि}-\text{वि}_1)(\text{प्र}_1-\text{द्वि}_1)$$
$$\text{वि}_1.\text{स}.\text{प}_2=(\text{वि}-\text{वि}_1)(\text{द्वि}_1-\text{तृ}_1)$$
$$\text{वि}_1.\text{स}.\text{प}_3=(\text{वि}-\text{वि}_1)(\text{तृ}_1-\text{च}_1)$$

अत्र यदि $\text{इ}.\text{वि}_1.\text{स}=(\text{वि}-\text{वि}_1)$

तदा

$$\frac{\text{प}_1}{\text{इ}}=\text{प्र}_1-\text{द्वि}_1 \therefore \text{द्वि}_1=\text{प्र}_1-\frac{\text{प}_1}{\text{इ}}$$
$$\frac{\text{प}}{\text{इ}_2}=\text{द्वि}_1-\text{तृ}_1 \therefore \text{तृ}_1=\text{द्वि}_1-\frac{\text{प}_2}{\text{इ}}$$
$$\frac{\text{प}_3}{\text{इ}}=\text{तृ}_1-\text{च}_1 \therefore \text{च}_1=\text{तृ}_1-\frac{\text{प}_3}{\text{इ}}$$

योगेन

$$\frac{\text{प}_1+\text{प}_2+\text{प}_3}{\text{इ}}=\text{प्र}_1-\text{च}_1$$ परन्तु $\text{च}_1$-मान धन

तेन $\text{प्र}_1>\dfrac{\text{प}_1+\text{प}_2+\text{प}_3}{\text{इ}}$

तथा $\text{प्र}>\text{प्र}_1$ यतः $\text{प्र}_1$ प्रथमखण्ड प्रथमधनम्यातोऽत्र $\text{प्र}_1$ मानमिष्ट प्रकल्प्य तस्मात् $\frac{\text{प}_1}{\text{इ}}$ विशोध्य $\text{द्वि}_1$-मान साध्य ततोऽन्यानि खण्डानि पूर्वयुक्त्या साध्यानि परन्तु यथा सर्वखण्डान्याभिमानि धनानि स्युस्तदर्थम् $\text{इ}=1$, इति कल्प्य तथा कृते जातानि खण्डानि

$\text{द्वि}=\text{प्र}_1-\text{प}_1$ । $\text{तृ}_1=\text{द्वि}_1-\text{प}_2$ । $\text{च}_1=\text{तृ}_1-\text{प}_3$ । अथ पूर्वसमीकरणेन $\text{इ}.\text{वि}_1.\text{स}=\text{वि}-\text{वि}_1$, अनेन $\text{वि}_1(\text{इ}.\text{स}+1)=\text{वि}$, यदि $\text{इ}=1$

तदा वि$_1$ (स + १) = वि । अतोऽन्यसमार्घमिदं प्रकल्प्य सैकेन समापवर्त्तनेन गुणमाद्यसमार्घमानं भवेदिति । यथाऽत्रोदाहृतौ

प्र = २०, द्वि = ४०, तृ = ६०, च = ८०

द्वि − प्र = २०, तृ − द्वि = २०, च − तृ = २०

समापवर्त्तनम् = २०, ततः प$_1$ = १, प$_2$ = १, प$_3$ = १

अथ प्र$_1$ − मानम् = १५ इति कल्पितम् ।

ततः प्र$_1$ = १५,
द्वि$_1$ = १५ − १ = १४
तृ$_1$ = १४ − १ = १३
च$_1$ = १३ − १ = १२

} अन्यसमार्घमानं रूपं कल्पित तदाऽऽद्यसमार्घमानं = वि१ = (स + १) = २१

पूर्वधनानि = २० । ४० । ६० । ८०

आद्यखण्डानि = १५ । १४ । १३ । १२

अन्यखण्डानि = ५ । २६ । ४७ । ६८

आद्यखण्डधनानि = ३१५ । २९४ । २७३ । २५२

आद्यखण्डधनानि = ५ । २६ । ४७ । ६८

समधनानि = ३२० । ३२० । ३२० । ३२०

अथान्यः प्रश्नः ।

षडष्टदिक्शतानि यद्धनानि ते समार्घतः
फलानि च प्रगृह्य विक्रयं प्रकृत्य शेषकम् ।
वसून् वसून् पणेन विक्रयं प्रकृत्य चाभवन्
समस्वकास्तदा वदाशु विक्रयं क्रय च मे ॥

कल्प्यते — धनानि प्र, द्वि, तृ, च, क्रयमान = क, विक्रयमानं = वि, शेषविक्रयमान = शे ।

तदा प्रश्नोक्त्या फलानि = प्र.क, द्वि.क, तृ.क, च.क ।

विक्रयेण हृते क्रमेण लब्धानि का, नी, पी, लो ।

ततः शेषाणि = प्र.क − वि.का । द्वि.क − वि.नी । तृ.क − वि.पी । च.क − वि.लो ।

$$\text{धनानि} = \frac{\text{प्र.क} - \text{का}\,(\text{वि} - \text{शे})}{\text{शे}} = \frac{\text{द्वि.क} - \text{नी}\,(\text{वि} - \text{शे})}{\text{शे}}$$

$$= \frac{\text{तृ.क} - \text{पी}\,(\text{वि} - \text{शे})}{\text{शे}} = \frac{\text{च.क} - \text{लो}\,(\text{वि} - \text{शे})}{\text{शे}}\ \text{वा,}$$

प्र.स.क − का (वि − शे) = द्वि.स.क − नी (वि − शे)

$=\text{तृ}'.\text{स}.\text{क}-\text{पी}(\text{वि}-\text{शे})=\text{च}'.\text{स}.\text{क}-\text{लो}(\text{वि}-\text{शे})$।

यत्र धनानां समापवर्त्तनं = स, तथा प्र = प्र'.स, द्वि = द्वि'.स, इत्यादि। अथ यदि स, शे अनयोः समापवर्त्तनं $=\text{स}_1$, तथा $\text{स}_1.\text{सं}=\text{स}$; $\text{अ}.\text{स}_1=\text{शे}$ तदा

$$\text{प्र}'.\text{सं}.\text{क}-\text{का}\left(\frac{\text{वि}}{\text{स}_1}-\text{अ}\right)=\text{द्वि}'.\text{सं}.\text{क}-\text{नी}\left(\frac{\text{वि}}{\text{स}_1}-\text{अ}\right)$$

$$=\text{तृ}'.\text{सं}.\text{क}-\text{पी}\left(\frac{\text{वि}}{\text{स}_1}-\text{अ}\right)=\text{च}'.\text{सं}.\text{क}-\text{लो}\left(\frac{\text{वि}}{\text{स}_1}-\text{अ}\right)$$

= अपवर्त्तितसमधनानि

अत्र यदि $\text{क}=\frac{\text{वि}}{\text{स}_1}-\text{अ}$ तदा, प्रथमफलानि $=\frac{\text{वि}.\text{प्र}}{\text{स}_1}-\text{अ}.\text{प्र}$

$$1+\text{का}=\frac{\frac{\text{वि}.\text{प्र}}{\text{स}_1}}{\text{वि}}=\frac{\frac{\text{वि}.\text{सं}.\text{प्र}'}{\text{स}_1}}{\text{वि}}=\frac{\text{वि}.\text{सं}.\text{प्र}'}{\text{वि}}=\text{सं}.\text{प्र}'$$

यदि $\text{वि}>\text{अ}.\text{प्र}$, एवमेव

$1+\text{नी}=\text{सं}.\text{द्वि}'$ यदि $\text{वि}>\text{अ}.\text{द्वि}$

$1+\text{पी}=\text{सं}.\text{तृ}'$ यदि $\text{वि}>\text{अ}.\text{तृ}$

$1+\text{लो}=\text{सं}.\text{च}'$ यदि $\text{वि}>\text{अ}.\text{च}$

तत उत्थापनेनापवर्त्तितसमधनानि सर्वत्र समानान्येव

यथा $\text{प्र}'.\text{सं}.\text{क}-\text{का}\left(\frac{\text{वि}}{\text{स}_1}-\text{अ}\right)$

$$=\text{प्र}'.\text{सं}\left(\frac{\text{वि}}{\text{स}_1}-\text{अ}\right)-\left(\text{सं}.\text{प्र}'-1\right)\left(\frac{\text{वि}}{\text{स}_1}-\text{अ}\right)=$$

$$\left(\frac{\text{वि}}{\text{स}_1}-\text{अ}\right)\left(\text{प्र}'.\text{सं}-\text{सं}.\text{प्र}'+1\right)=\frac{\text{वि}}{\text{स}_1}-\text{अ}$$

अत्र शेषविक्रयेण यथा सर्वेषां शेषधनान्यभिन्नानि, स्युस्तदर्थं क्रयविक्रययोर्माने तथा कल्प्ये यथा शेषविक्रयभक्ते अभिन्ने फले स्तास्तदा विक्रयस्वरूपम् $\frac{\text{वि}}{\text{शे}}=$ अभिन्नम्।

$\text{वि}>\text{अ}.\text{प्र}$, $\text{अ}.\text{द्वि}$, $\text{अ}.\text{तृ}$, $\text{अ}.\text{च}$, तत क्रयमानम् $=\frac{\text{वि}}{\text{स}_1}-\text{अ}=\frac{\text{अ}.\text{वि}}{\text{शे}}-\text{अ}$

$$=\text{अ}\left(\frac{\text{वि}}{\text{शे}}-1\right)$$

यथा प्रकृतोदाहरणे चतुर्णां धनानि = ६ । ८ । १० । १००
धनाना समापवर्त्तनम् = २, शेषविक्रयमानम् = ८ = शे
२, ८ अनयोरपवर्त्तने च स, = २ तत अ = ४
अत्र कल्पितविक्रयमानम् = ४०८ > अ.च = ४००

तथा $\frac{४०८}{८} = \frac{वि}{शा} = ५१$ = अभिन्नम्

तदा क्रयमानम् = अ $\left(\frac{वि}{शा} - १\right) = ४\ (५१ - १) = २००$

ततः फलानि = १२०० । १६०० । २००० । २००००
विक्रयेण ४०८ अनेन हृते शेषाणि = ३८४ । ३७६ । ३६८ । ८
शेषविक्रयेण ८ अनेन हृते शेषधनानि = ४८ । ४७ । ४६ । १
प्रथमविक्रयधनानि = २ । ३ । ४ । ४९ समधनानि = ५० ।

अथ

## नवीनप्रक्षिप्तविषयाः ।

### घातेङ्गितम् ।

यथैकघात कस्यापि तत्समान एव, द्विघातो वर्गस्त्रिघातो घन एव वर्गवर्ग इत्यादि- यथेष्टघाता भवितुमर्हन्ति । पाश्चात्यगणिते यस्य घातोऽपेक्ष्यते तन्मस्तकोपरि तद्घात- ज्ञापनाय तदङ्का रक्ष्यन्त इति यथा $अ^१ = अ$ । $अ^२ = अ^१ \times अ^१$ । $अ^३ = अ^२ \times अ^१ = अ^१ \times अ^१ \times अ^१$, एव यथेष्टम् $अ^न = अ^१ \times अ^१ \times अ^१ \times अ^१ \times \cdots\cdots$ ।

इहोर्ध्वरूपदर्शनादवगम्यते तद्घातज्ञापका एकद्वित्र्यादयः । एकघाते स एव । यदि द्विघाते विचार क्रियते तदा $अ^१ \times अ^१$ अत्र एकघात एकघातेन गुण्यतेऽनयैक- योर्योगो द्वयम् $अ^१ \times अ^१ = अ^२$, एवम् यथेष्टघातेषु तदिष्टज्ञापनाय न, म, इत्यादि । यथा इष्टघात पञ्च तत्र न = ५ ।

आङ्गले घात = Powers-

अथ कल्प्यते कश्चिद्राशि पञ्चदशघात । यथा $क^{१५} = क^{५+१०} = क^{न+म}$ यदीह न = ५ । म = १० ।

$क^{१५} = क^{३ \times ५} = क^{न+न+न} = क^{३न}$ एव च तत्प्रमोऽवगम्य ।

$क^{३\times५} = क^{न\times न}$ यदीह च = ३। अत्र च, न इति पञ्चदशानामवयवौ।
एव पञ्चः = ४×३×५ अस्याः फ, च, न इत्यवयवाः। यदीह फ = ४। आङ्ग्ले
गुणकावयवाः फैक्टर्स ( Factors ) इति कथ्यते। आङ्गलेऽव्यक्तगणिते गुणकाव
यवानामतीवोपयोगः। भास्करीयाव्यक्तगणितविदस्तदवयवज्ञानविधुराः पाश्चात्याव्यक्त
गणितप्रश्नोत्तरे प्रायः त्रिलक्ष्यन्त्यतस्तदवयवप्रपञ्चोऽत्र प्रदर्श्यते।

यथा $अ^२ - क^२ = ( अ + क ) ( अ - क )$ एताववयवौ। एवम्

$( अ^३ + क^३ ) = ( अ + क ) ( अ^२ - अ. क + क^२ )$,

$अ^३ - क^३ = ( अ - क ) ( अ^२ + अ.क + क^२ )$,

$अ^३ + क^३ + ग^३ - ३ अ. क. ग = ( अ + क + ग ) ( अ^२ + क^२ + ग^२ -$
$अ. क - अ.ग - क.ग )$।

एवमवयवद्वयघटितेषु समानावयवपृथक्करणं सुलभम्।

(१) उदा—$२४ य.^४ अ^३ - ४० य.^२ अ^४ + ५६ य.^२ अ^५$
$= ८य.^२ अ^३ ( ३य^२ - ५ य.अ + ७अ^२ )$।

अथ $य^२ + य.प + फ$ अत्रावयवपृथक्करणे विचारः। यदि प = क + ग,
फ = क.ग तदा $य^२ + य. प + फ = य^२ + य ( क + ग ) + क.ग$
$= य^२ + य. क + य. ग + क.ग = य ( य + क ) + ग ( य + क ) = ( य + क )$
$( य + ग )$।

अत्रेदमवगम्यते यत् प, फ अनयोर्व्यक्ताङ्ककल्पने तदेव युक्तं ययोर्योगः = प तयो-
र्घात = फ तदा प = १७, फ = ३०। ततः $य^२ + प.य + फ = य^२ + १७ य + ३०$
$= य^२ + १५ य + २य + ३० = य ( य + १५ ) + २ ( य + १५ )$
$= ( य + १५ ) ( य + २ )$।

( २ ) उदा.—$ग^२ - १२ग.न + २०न^२$ अत्रापि पूर्वरीत्या व्यक्ताङ्कौ
−२, −१० अनयोर्योगः = −१२ घातश्च = २० तदा उत्त. = $( ग - १० न )$
$( ग - २ न )$

( ३ ) उदा.—$अ^४ - अ^२ - १२$ अत्र यदि $अ^२ = य$ तदा $अ^४ - अ^२ - १२$
$= य^२ - य १२$ अत्राप्युक्तरीत्या द्वौ व्यक्ताङ्कौ −४, ३ अत उत्त—
$= ( य - ४ ) ( य + ३ ) = ( अ^२ - ४ ) ( अ^२ + ३ )$

( ४ ) उदा.—$८य^२ + २य - ३ = \frac{१}{८} ( ८ \times ८य^२ + २ \times ८य - ८ \times ३ )$,
( यदीह ८य = अ, तदा )
$= \frac{१}{८} ( अ^२ + २अ - २४ ) = \frac{१}{८} ( अ + ६ ) ( अ - ४ )$

$=\frac{१}{८}(८य+६)(८य-४)=\frac{१}{८}\left\{२(४य+३)\times४(२य-१)\right\}$

$=(४य+३)(२य-१)$ इदमेवोत्तरम् ।

( ५ ) उदा —$य^२-७य+१२=य^२-७य+(\frac{७}{२})^२-(\frac{७}{२})^२+१२$

$=य^२-७य+(\frac{७}{२})^२-\frac{४९}{४}+१२=(य-\frac{७}{२})^२-(\frac{१}{२})^२$

$=\left\{(य-\frac{७}{२})+\frac{१}{२}\right\}\left\{(य-\frac{७}{२})-\frac{१}{२}\right\}$

$=(य-३)(य-४)$ इदमेवोत्तरम् ।

( ६ ) उदा.—$८य^२-१०य+३=८(य^२-\frac{१०य}{८}+\frac{३}{८})=८(य^२-\frac{५य}{४}+\frac{३}{८})$

$=८\left\{य^२-\frac{५य}{४}+(\frac{५^२}{८})\right\}-(\frac{२५}{६४}-\frac{३}{८})=८(य-\frac{५}{४})^२-(\frac{१}{८})^२$

$=८(य-\frac{५}{८}+\frac{१}{८})(य-\frac{५}{८}-\frac{१}{८})$

$=८(य-\frac{४}{८})(य-\frac{६}{८})=८(य-\frac{१}{२})(य-\frac{३}{४})$

$=२(य-\frac{१}{२})\times४(य-\frac{३}{४})=(२य-१)(४य-३)$

इदमेवोत्तरम्

वर्गसमीकरणेऽस्य महानुपयोग ।

( ७ ) उदा,—$३य^२-१२य+१=६य-२३$

अत $(३य^२-१२य+१)-(६य-२३)=०=३य^२-१८य+२४=३(य^२-६य+८)=०$

गुणकावयवपृथक्करणरीत्या० $=३(य-४)(य-२)$ अत्र $य-४$ वा $य-२$ अनयोरेकतरेऽस्मिन् शून्ये कल्पिते $य=४$ वा $य=२$ एव भजनापवर्त्तनादिष्वस्योपयोग· कर्त्तुं शक्यते ।

## मूलेङ्गितम् ।

कस्यापि मूल पदमित्युच्यमाने साधारणतया द्विघातमूल वर्गमूल वर्गपद वाऽवगम्यते । एव घनपदमित्यादि । यथा $\sqrt{अ^२}=अ$, एवम् $\sqrt[३]{अ^३}=अ$ $\sqrt[४]{अ^४}=अ$ इत्यादि सर्वमेतत् पाश्चात्यगणिते Surd इति कथ्यते किन्तु प्राचामिह श्रीमद्भास्करादीना गणिते करणीकथनाद्वर्गपदमेव ।

यथा–भास्करादीना नये क२, क३, क५, क६, क७, क८, पाश्चात्ये च $\sqrt{२}$, $\sqrt{३}$, $\sqrt{५}$, $\sqrt{६}$, $\sqrt{७}$, $\sqrt{८}$ अत. क इति वा √ सकुचितनिश्चूडमयूरचञ्चुमारभ्यापुच्छमाकारो वर्गमूल वर्गपद च पाश्चात्यनये तद्मात्रापृष्ठसयोगे घनपदार्थं

वर्गवर्गपदार्थमेवं घनघातपदार्थं तद्घाताङ्का रक्ष्यन्ते यथा $\sqrt[३]{\;}$, $\sqrt[४]{\;}$, $\sqrt[५]{\;}$ .............।

यस्य करणीगताङ्कस्य वर्गरूप खण्डं न भवेदथ यस्य च करणीगताङ्कस्य वर्गरूपं खण्डं भवेत् तत्रावर्गरूपं यदपर खण्डं सैव मूलकरणी कथ्यते तत्र वर्गरूपकरणीखण्डस्य च मूलाङ्कस्तस्या मूलकरण्या गुणको भवति।

यथा—$\sqrt{१८}=\sqrt{९}\times\sqrt{२}=३\sqrt{२}$।

यासां मूलकरण्यङ्कस्तुल्यस्ताः सजातीयमूलकरण्यः।

यथा—$\sqrt{१८}$, $\sqrt{३२}$, $\sqrt{५०}$ एताःसजातीयाः। अत्र मूलकरण्यङ्कः $\sqrt{२}$ सर्वत्र सम एव।

अव्यक्तवत् सजातीयकरणीनामेव योगोऽन्तरं च भवति।

यथा—$\sqrt{२०}+\sqrt{२७}+\sqrt{८}+\sqrt{४५}-\sqrt{३२}+\sqrt{४८}$ एतत्स्वरूपस्य किं मानम्। अत्र मूलकरणीविभजनतो रूपम्।

$२\sqrt{५}+३\sqrt{३}+२\sqrt{२}+३\sqrt{५}-४\sqrt{२}+४\sqrt{३}$

अत्र सजातीयकरणानां योगान्तरतो रूपम् $५\sqrt{५}+७\sqrt{३}-२\sqrt{२}$ इदमेवोत्तरम्।

अथ यानि चित् करणीसंबन्धीनि समीकरणानि। यत्र द्विधा अव्यक्तराशयः।

(१) $२^{य+७}=४^{य+१}=२^{य+७}=२^{२(य+१)}$

$\therefore य+७=२य+४ \therefore य=३$

(२) $(\sqrt{३})^{य+५}=(\sqrt[३]{३})^{२य+५}, ३^{\frac{य+५}{२}}=३^{\frac{२य+५}{३}}$

$\therefore \frac{य+५}{२}=\frac{२य+५}{३} \therefore ३य+१५=४य+१० \therefore य=५$

(३) $२^{३य-२}=४^{र-१}$ अथ $३य-र=१ \therefore ३^{३य-१}=३^{२र-२}$

$\therefore ३य-१=२र-२ \therefore ३य-२र=-१=-३य+र \therefore र=२$

$\therefore य=१$

(४) $२^{४य-१}=(\sqrt{२})^{२१-य}, २^{४य}=४^{र} । २^{४य-६}=$

$२^{\frac{२१-य}{२}}, २^{४य-६}=२^{\frac{२१-य}{२}} \therefore ४य-६=\frac{२१-य}{२} \therefore ८य-१२=२१-य$

$\therefore ९य-२१=१२$।

पुन. $\text{२}^{\text{३य}} = \text{२}^{\text{२र}}$ ∴ ३ य = २ र ∴ ३ य − २ र = ०

∴ (९ य − २) − (३ − २र) = १२ − ० = ६ य = १२ ∴ य = २, र = ३

(५) $\left(\sqrt{\text{अ}}\right)^{\text{य}+\text{र}} = \left(\sqrt[3]{\text{अ}}\right)^{\text{र}+\text{ल}+\text{१}}$

$\left(\sqrt[3]{\text{क}}\right)^{\text{य}+\text{ल}-\text{२}} = \left(\sqrt[5]{\text{क}}\right)^{\text{र}+\text{ल}}$

$\left(\sqrt[4]{\text{ग}}\right)^{\text{२र}} = \left(\sqrt[6]{\text{ग}}\right)^{\text{य}+\text{र}+\text{ल}}$

अत्र य, र, ल एषां मानानि साध्यन्ते ।

$\text{अ}^{\frac{\text{य}+\text{र}}{\text{२}}} = \text{अ}^{\frac{\text{र}+\text{ल}-\text{१}}{\text{३}}}$ ∴ $\frac{\text{य}+\text{र}}{\text{२}} = \frac{\text{र}+\text{ल}-\text{१}}{\text{३}}$ ∴ ३ य + ३र

= २ र + २ ल − २ ∴ ३ य + र − २ल = − २ । $\text{क}^{\frac{\text{य}+\text{ल}-\text{२}}{\text{३}}} =$

$\text{क}^{\frac{\text{र}+\text{ल}}{\text{५}}}$ ∴ $\frac{\text{य}+\text{ल}-\text{२}}{\text{३}} = \frac{\text{र}+\text{ल}}{\text{५}}$ ∴ ५ य − ३ र + २ ल = १० । $\text{ग}^{\frac{\text{२र}}{\text{४}}}$

$= \text{ग}^{\frac{\text{य}+\text{र}+\text{ल}}{\text{६}}}$ ∴ $\frac{\text{२र}}{\text{४}} = \frac{\text{य}+\text{र}+\text{ल}}{\text{६}}$ ∴ १२र = ४ य + ४र + ४ ल

∴ ४ य − ८ र + ४ल = ० ∴ (३ य + र − २ ल) + (५ य − ३ र + २ल)

= − २ + १० = ८ य − २र = ८ ∴ ४ य − र = ४ । २० − ०

= (१० य − ६ र + ४ ल) − (४य − ८र + ४ल) = ६ य + २र = २०

∴ ३ य + र = १० ∴ (४ य − २) + (३य + र) = ४ + १०

∴ ७ य = १४ ∴ य = २, र = ४, ल = ६ ।

अभ्यासार्थ प्रश्नाः ।

(१) कल्प्यते अ + क = ५७६०, अ − क = $\frac{\text{अ}}{\text{३}}$ तदा अ = ३४५६,

क = २३०४ इति कथम् ।

(२) यदि $\frac{\text{२क}+\text{१}}{\text{२}} = \frac{\text{७ क}+\text{५}}{\text{८}}$ तदा कमानम् = १ इति कथम् ।

(३) यदि $\frac{\text{क}+\text{१}}{\text{२}} + \frac{\text{३क}-\text{४}}{\text{५}} + \frac{\text{१}}{\text{२}} = \frac{\text{६क}+\text{७}}{\text{८}}$, तदा क = ३० इति कथम् ।

(४) „ $(\text{क}+\tfrac{\text{५}}{\text{२}})(\text{क}-\tfrac{\text{३}}{\text{२}}) - (\text{क}+\text{५})(\text{क}-\text{३}) + \tfrac{\text{३}}{\text{४}} = \text{०}$

तदा क = १२ इति कथम् ।

( ५ ) कोऽसावङ्को यस्य तृतीयसप्तमभागयोर्योगः = २० । उत्तरम् = ४२ ।

( ६ ) यदि अ + क = ७, अ. र = १२ तदा अ = ३, क = १२ कथमिति ।

( ७ ) ,, य$^{२}$ + र$^{२}$ = ६५, य − र = ३ तदा य = ७, − ४, र = ४, − ७ इति कथम् ।

( ८ ) ,, य$^{२}$ + र$^{२}$ = ७४, य.र = ३५ तदा य = ५, ७, − ५, − ७, र = ७, ५, − ७, − ५ इति कथम् ।

( ९ ) ,, य$^{३}$ + र$^{३}$ = ६३७, य + र = १३ तदा य = ८, ५, र = ५, ८ कथम्

(१०) ,, य − र = − १८, य × र = १३६३ तदा य = २९, − ४७, र = ४७, − २९ कथम् ।

(११) ,, य$^{३}$ − र$^{३}$ = २१८, य − र = २ तदा य = ७, − ५, र = ५, − ७ कथम् ।

(१२) ,, य + र = य$^{२}$, ३ र − य = र$^{२}$ तदा य = ०, २, २ ± $\sqrt{२}$, र = ०, २, २ ∓ $\sqrt{२}$ कथम् ।

---

# अशुद्धिशुद्धिपत्रम् ।

| अशुद्धिः | शुद्धिः | पृ० | पं० |
|---|---|---|---|
| तस्या कृतित्वात् | तस्याकृतित्वात् | ४ | २१ |
| ऽर्थात् | ऽर्थात् | ५ | २० |
| या २ रू १ | या ४ रू १ | ९ | २ |
| पूव- | पूर्व- | ९ | ८ |
| हाराध | हारार्धं | ९ | ८ |
| या ५ रू १ | या ४ रू १ | १० | ३ |
| का ४ | का ४ं | ११ | २० |
| का २ | का २ं | १२ | २ |
| रू १६ | रू १६ं | १३ | १० |
| क ७५ | क ७ं५ | १४ | ११ |
| ७२ | क ७२ | १७ | १ |
| अनया- | अनयो- | १६ | २० |
| राशी | राशौ | २२ | ५ |
| सिमद्धै- | सिद्धै- | २२ | १४ |
| क-६, -२१क | क२-६ -२१क | २५ | १६ |
| न्निशेप- | न्निःशेष- | २५ | २२ |
| तौस्तः | तौ स्तः | २६ | २ |
| हा. इ | हां. इ | २७ | ७ |
| पूव- | पूर्व- | २९ | १ |
| वज्ञा- | वज्रा- | २९ | १५ |
| ऋर. | ऋण | ३० | १८ |
| राशि | राशिः | ३१ | २७ |
| नानिहारः | नानि हारः | ३२ | १ |
| द्रहा | द्रुग्रहा | ३२ | ४ |
| तपद्यथा | तद्यथा | ३२ | ५ |

